माहित्थेर्माहित्थिर्वामकक्षायणाद्वामकक्षायणः शाण्डिल्याच्छाण्डिल्यो वात्स्याद्वात्स्यः कुश्रेः कुश्रिर्यज्ञवचसो राजस्तम्बायनाद्यज्ञवचा राजस्तम्बायनस्तुरात्कावषेयात्तुरः कावषेयः प्रजापतेः प्रजापतिर्ब्रह्मणो ब्रह्म स्वयंभु ब्रह्मणे नमः ॥४॥

इति बृहदारण्यकोपनिषदि षष्ठाध्यायस्य
पञ्चमं ब्राह्मणम् ॥५॥

इति वाजसनेयके बृहदारण्यकोपनिषदि षष्ठोऽध्यायः ॥६॥

इति वाजसनेयकबृहदारण्यकक्रमेणाष्टमोऽध्यायः ॥८॥

---

अथेदानीं समस्तप्रवचनवंशः। स्त्रीप्राधान्यात्। गुणवान्पुत्रो भवतीति प्रस्तुतम्। अतः स्त्रीविशेषणेनैव पुत्रविशेषणादाचार्यपरम्परा कीर्त्यते। तानीमानि शुक्लानीत्यव्यामिश्राणि ब्राह्मणेन। अथवा यानीमानि यजूंषि तानि शुक्लानि शुद्धानीत्येतत्। प्रजापतिमारभ्य यावत्पौतिमाषीपुत्रस्तावदधोमुखो नियताचार्यपूर्वक्रमो वंशः समानमा सांजीवीपुत्रात्। ब्रह्मणः प्रवचनाख्यस्य। तच्चैतद्ब्रह्म प्रजापति-

---

सांनिध्यात्खिलकाण्डस्य वंशोऽयमिति शङ्कां निरस्यन्वंशब्राह्मणतात्पर्यमाह—अथेति। विद्याभेदादतीतस्य काण्डद्वयस्य प्रत्येकं वंशभाक्त्वेऽपि नास्य पृथक्त्वभागित्वं खिलत्वेन तच्छेषत्वात्। तथा च समाप्तौ पठितो वंशः समस्तस्यैव प्रवचनस्य भविष्यतीत्यर्थः। पूर्वौ वंशौ पुरुषविशेषितौ तृतीयस्तु स्त्रीविशेषितस्तत्र किं कारणमित्याशङ्क्याऽऽह—स्त्रीप्राधान्यादिति। तदेव स्फुटयति—गुणवानिति। कीर्त्यते ब्राह्मणेनेति संबन्धः। शुक्लानि यजूंषीत्यस्य व्याख्यानमव्यामिश्राणीति। दोषैरसंकीर्णानि पौरुषेयत्वदोषद्वाराभावादित्यर्थः। अयातयामान्यदुष्टान्यगतार्थानीत्यर्थः। पाठक्रमेण मनुष्यादिः प्रजापतिपर्यन्तो वंशो व्याख्यातः। संप्रत्यर्थक्रममाश्रित्याऽऽह—प्रजापतिमिति। अधोमुखत्वं पाठक्रमापेक्षयोच्यते। तत्रापि प्रजापतिमारभ्य सांजीवीपुत्रपर्यन्तं वाजसनेयिशाखासु सर्वास्वेको वंश इत्याह—समानमिति। प्रवचनाख्यस्य

नमो जन्मादिसंबन्धहेतुविध्वंसहेतवे ।
हरये परमानन्दपरिज्ञानवपुर्भृते ॥ १ ॥

नमस्त्रय्यन्तसंदोहसरसीरुहभानवे ।
गुरवे परपक्षौघध्वान्तध्वंसपटीयसे ॥ २ ॥

इति श्रीमत्परमहंसपरिव्राजकशुद्धानन्दपूज्यपादशिष्यभगवदानन्दज्ञानकृतायां बृहदारण्यकोपनिषद्भाष्यटीकायां षष्ठोऽध्यायः ॥६॥

---

प्रबन्धपरम्परयाऽऽगत्यास्मास्वनेकधा विप्रसृतमनाद्यनन्तं स्वयंभु ब्रह्म नित्यं तस्मै ब्रह्मणे नमः । नमस्तदनुवर्तिभ्यो गुरुभ्यः ॥ १ ॥ २ ॥ ॥ ३ ॥ ४ ॥

इति बृहदारण्यकोपनिषद्भाष्ये षष्ठाध्यायस्य
पञ्चमं ब्राह्मणम् ॥ ५ ॥

इति श्रीगोविन्दभगवत्पूज्यपादशिष्यस्य परमहंसपरिव्राजकाचार्यस्य श्रीशंकरभगवतः कृतौ बृहदारण्यकोपनिषद्भाष्ये
षष्ठोऽध्यायः ॥ ६ ॥

———

---

वंशात्मनो ब्रह्मणः संबन्धात्प्रजापतिर्विद्यां लब्धवानित्याह—ब्रह्मण इति । तस्याधिकारिभेदादवान्तरभेदं दर्शयति—तच्चेति । प्रजापतिमुखप्रबन्धः प्रपञ्चः सैव परम्परा तयेति यावत् । तस्य परमात्मरूपं स्वयंभूत्वमभिदधाति—अनादीति । तस्यापौरुषेयत्वेनासंभावितदोषतया प्रामाण्यमभिप्रेत्य विशिनष्टि—नित्यमिति । आदिमध्यान्तेषु कृतमङ्गला ग्रन्थाः प्रचारिणो भवन्तीति मन्वानः सन्नाह—तस्मै ब्रह्मणे नम इति ॥ १ ॥ २ ॥ ३ ॥ ४ ॥

इति बृहदारण्यकोपनिषद्भाष्यटीकायां षष्ठाध्यायस्य
पञ्चमं वंशब्राह्मणम् ॥ ५ ॥

———

समाप्तेयं सटीकशांकरभाष्योपेता बृहदारण्यकोपनिषत् ।
ॐ तत्सत् ॥

———

# अथ बृहदारण्यकोपनिषत्कण्डिकाद्यपदानां वर्णानुक्रमः प्रारभ्यते ।

—०—

र.

समाप्तोऽयं बृहदारण्यकोपनिषत्कण्डिकाद्य-
पदानां वर्णानुक्रमः ।



## हमारी प्रकाशित पुस्तकें